अनिश्चयात्मकं ज्ञानं च स्यात्, सोऽनध्यवसायः – 'किंसञ्ज्ञकोऽयं वृक्षः' इति । अन-वधारणं ज्ञानमनध्यवसाय इत्युक्ते संशयादावतिव्याप्तिः तन्निरासाय अनालिङ्गितोभय-कोटीति । तथोक्ते सम्यग्ज्ञानेऽतिव्याप्तिः, तन्निरासाय अनवधारणेति ॥ २६० ॥

बुद्धेर्भेदानां सर्वेषां लक्षणान्यभिधाय सुखभेदलक्षणमाह—

**प्रयत्नोत्पाद्यसाधनाधीनं सुखं सांसारिकम् ॥ २६१ ॥**

प्रयत्नेन—उद्यमेन उत्पाद्यानि यानि साधनानि स्रक्चन्दनाङ्गनासंयोगादीनि तद-धीनं तदायत्तं यत् । साधनाधीनं सांसारिकमित्युक्ते घटादावतिव्याप्तिः, तन्निरासार्थं सुख-मिति । साधनाधीनं सुखं सांसारिकमित्युक्ते स्वर्गसुखेऽतिव्याप्तिः, तन्निरासार्थं प्रयत्नोत्पा-द्येति, स्वर्गसुखमिच्छामात्रादेव भवति, न प्रयत्नात्, यच्चिन्त्यते तदग्रत एव भवति ॥२६१॥

**इच्छामात्राधीनसाधनसाध्यं सुखं स्वर्गस्थम् ॥ २६२ ॥**

इच्छामात्राधीनानि वाञ्छामात्रेणोपनायमानानि साधनानि स्रक्चन्दनाङ्गनासंयो-गादीनि, तदुत्पाद्यं यत्स्वर्गस्थम् । साधनसाध्यं स्वर्गस्थमित्युक्ते घटादावतिव्याप्तिः, तन्नि-रासार्थं सुखमिति । तथोक्ते सांसारिकसुखेऽतिव्याप्तिः तन्निरासार्थमिच्छाधीनेति । इच्छाधीन-साधनसाध्यं सुखं स्वर्गस्थमित्युक्ते राजादिसुखेऽतिव्याप्तिः तन्निरासार्थं मात्रेति । राजादी-नामपि नेच्छामात्रादेव सुखसिद्धिः किन्तु इच्छाऽनुवचनम्, वचनाज्जनप्रयत्नः, तस्मात्सा-धनमेलनं ततः सुखम् । स्वर्गसुखे तु इच्छामात्रादेव सर्वं सुखसाधनं संयुज्यते ॥ २६२ ॥

द्रवत्वं सांसिद्धिकं नैमित्तिकं चेत्युक्तम् । तल्लक्षयति—

**सांसिद्धिकत्वं तेजःसंयोगानुत्पाद्यत्वम् ॥ २६३ ॥**

यत् तेजःसंयोगं विनैव द्रवत्वं भवति जलादौ तत्सांसिद्धिकम् ॥ २६३ ॥

**तेजःसंयोगोत्पाद्यत्वं नैमित्तिकत्वम् ॥ २६४ ॥**

तेजःसंयोगेन—वह्न्यादिसम्बन्धेनोत्पाद्यं सर्पिःस्वर्णादौ द्रवत्वं, तन्नैमित्तिकम् ॥२६४

संस्कारभेदान् लक्षयति—

**कर्म्मजः संस्कारो वेगः ॥ २६५ ॥**

संस्कारो वेग इत्युक्ते भावनादावतिव्याप्तिः, तन्निरासार्थं कर्म्मज इति । कर्म्मज इत्युक्ते संयोगादावतिव्याप्तिः, तन्निरासार्थं संस्कार इति ॥ २६५ ॥

**ज्ञानजः संस्कारो भावना ॥ २६६ ॥**

---

१ प्रयत्नोत्पाद्य अ. १ । २ प्रयत्नवशात् अ. २ । ३ इच्छामात्राधीनं अ. १ । ४ स्वर्गः क । ५ 'सुखम्' अ. १ पुस्तके अधिकम् इदं पदम् । ६ 'तुत्पाद्यं अ. १ ।

ज्ञानादनुभवाज्जातः संस्कारो धारणाविशेषः स्मृतेरुत्पादको भावनेत्युच्यते। संस्कारो भावनेत्युक्ते वेगादावतिव्याप्तिः, तन्निरासार्थं ज्ञानज इति । ज्ञानज इत्युक्ते सुखादावति-व्याप्तिः तन्निरासार्थं संस्कार इति ॥ २६६ ॥

**ऋजुत्वापादकः[1] संस्कारः स्थितिस्थापकः ॥ २६७ ॥**

ऋजुत्वं पूर्वावस्था तत्र वस्त्वापादयतीति ऋजुत्वापादकः । संस्कार इत्युक्ते वेगा-दावतिव्याप्तिः तन्निरासार्थम् ऋजुत्वापादक इति । ऋजुत्वापादक इत्युक्ते पुरुषादावति-व्याप्तिः पुरुषोऽपि चक्रीभूतं वस्तु सरलीकरोति तन्निरासार्थं संस्कार इति ॥ २६७ ॥

संयोगादयोऽव्यापका इत्युक्तं, तदव्यापकत्वं लक्षयति—

**अव्यापकत्वं[2] स्वाभावसादेश्यम्, तदभावो[3] व्यापकत्वम् ॥ २६८ ॥**

समानदेशस्य भावः सादेश्यम् । स्वाभावेन सह सादेश्यं स्वाभावसादेश्यम् । यत्रा-श्रये संयोगो वर्त्तते तत्राश्रये संयोगाभावो वर्त्तते । आश्रयैकदेशे संयोगः, आश्रयैकदेशे संयोगाभावः इति स्वस्याभावस्य च समानदेशत्वम् । एतावता यो गुण आश्रयैकदेशे भवति, आश्रयैकदेशे च न स्यात् सोऽव्यापकः ॥ २६८ ॥

उत्क्षेपणादयो विहितनिषिद्धोदासीना इत्युक्तं, तल्लक्षयति—

**विहितत्वं धर्मोत्पादकत्वम् ॥ २६९ ॥**

यस्मिन्कर्मणि विहिते धर्म उत्पद्यते तद् विहितम् ॥ २६९ ॥

**अधर्मोत्पादकत्वं निषिद्धत्वम् ॥ २७० ॥**

यस्मिन्कर्म्मणि कृतेऽधर्म्मः पापमुत्पद्यते तन्निषिद्धम् ॥ २७० ॥

**उभयविपरीतत्वमुदासीनत्वम् ॥ २७१ ॥**

उभयाभ्यां विहितनिषिद्धाभ्यां यद्विपरीतं तदुदासीनम् । यस्मिन् कर्मणि कृते न धर्म्म उत्पद्यते नाप्यधर्म्म इत्यर्थः ॥ २७१ ॥

सामान्यं द्विविधमुक्तं, जातिरूपमुपाधिरूपं च, तल्लक्षयति—

**निर्बाधकं सामान्यं जातिः ॥ २७२ ॥**

'व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥'

---

१ स्थित्यापादकः क. मि पाठोऽयं मितभाषिणीकारस्यासम्मतः-मि. भा. पृ. ८१ ।
२ अव्यापकं अ. १ । ३ सूत्रांशोयं द्वयोरप्यादर्शपुस्तकयोर्नास्ति, क. मि. पुस्तकयोस्तु अस्ति, अनेन लक्षणेन चात्र भाव्यम् ।

एतेषां जातिबाधकानां मध्ये यत्र किमपि न स्यात्तज्जातिरूपं सामान्यं द्रव्यत्व-गुणत्व-कर्मत्वादि ॥ २७२ ॥

**सबाधकं सामान्यमुपाधिः ॥ २७३ ॥**

व्यक्त्यभेदादिकं यत्र किमपि बाधकं भवति तदुपाधिरूपं यथा आकाशत्वादि ॥२७३

प्रागुक्तमन्धकारोऽप्यभाव इति तल्लक्षयति—

**आरोपितनीलरूपोऽभावोऽन्धकारः ॥ २७४ ॥**

आरोपितं नीलं रूपं यस्मिन्नभावे स आरोपितनीलरूपः । अभावोऽन्धकार इत्युक्ते घटाभावेऽतिव्याप्तिः, तन्निरासार्थं नीलरूपः । नीलरूपोऽन्धकारः इत्युक्तेऽसम्भवः । रूपाभावात् तन्निरासार्थम् आरोपितेति । आरोपितनीलरूपोऽन्धकार इत्युक्ते 'नीलरूपमाकाशम्' आकाशेऽपि नीलरूपमारोप्यते, तत्रातिव्याप्तिः तन्निरासार्थम् अभाव इति ॥ २७४ ॥

ज्ञातता ज्ञानसम्बन्ध एवेत्युक्तं तन्न घटते । ज्ञानसम्बन्धः को नाम ? संयोगः समवायो वा ? न तावत्संयोगः, ज्ञानस्य गुणत्वात् , संयोगस्य च द्वयोर्द्रव्ययोरेव सम्भवात् । ज्ञातता च वस्तुधर्मोऽतो 'ज्ञानसम्बन्धो ज्ञातता' इति न घटते इत्याशङ्क्याह—

**ज्ञानसम्बन्धो ज्ञानविषयत्वम् ॥ २७५ ॥**

अत्र वस्तुभिः ज्ञानसम्बन्धः संयोगः समवायो वा न विवक्षितः किन्तु विषयविषयिभावः । पदार्थानां ज्ञानेन सह यो विषयविषयिभावलक्षणः सम्बन्धो भवति सैव ज्ञाततेति ॥ २७५ ॥

वस्तूनां प्रमेयत्वलक्षणो धर्म्मः सर्वशास्त्रप्रसिद्धः श्रूयते स क इत्याशङ्क्याह—

**तत्त्वज्ञानेन नियमेनावच्छेद्यत्वं प्रमेयत्वम् ॥ २७६ ॥**

नियमेन निश्चयेन तत्त्वज्ञानेन–सम्यग्बोधेन यद्वस्तूनामवच्छेद्यत्वं तत्प्रमेयत्वम् । अवच्छेद्यत्वं प्रमेयत्वमित्युक्ते गुणा द्रव्यस्यावच्छेदका भवन्ति तत्राऽतिव्याप्तिः, तन्निरासार्थं ज्ञानेति । तथोक्ते शुक्तिरजताद्यारोपेऽतिव्याप्तिः, तन्निरासार्थं तत्त्वज्ञानेति । तथोक्ते संशयेऽतिव्याप्तिः, संशयस्यैककोटेः सत्यत्वात् , तन्निवृत्त्यर्थं नियमेनेति ॥ २७६ ॥

पूर्वं सङ्ख्याया गुणेष्वन्तर्भावः सिद्धवदभिहितः तन्न घटते सङ्ख्यायाः षट्पदार्थेषु वृत्तित्वात् सङ्ख्या पृथक् सप्तमः पदार्थः इत्याशङ्क्य गुणेष्वन्तर्भावमाह—

**गुणादिषु च सङ्ख्याव्यवहारः सङ्ख्याप्रत्यासत्तिनिबन्धनः ॥ २७७ ॥**

---

१ ज्ञानविषयत्वं ज्ञानसम्बन्धः अ. १ । २ विषयविषयिभावः अ. १ ।

द्रव्येष्वेव गुणादयः सन्ति, सङ्ख्यापि वर्त्तते । एकत्रैवाऽवस्थानेऽवस्थितिः प्रत्यासत्तिस्तन्निबन्धनम् । तन्निबन्धनः गुणादिषु सङ्ख्याव्यवहारो न पुनः सङ्ख्यासमवायनिबन्धनः । यथा गङ्गातटयोः सामीप्यात् गङ्गाशब्दस्तटे प्रवर्त्तते एवं सङ्ख्यागुणयोरेकस्मिन् द्रव्ये वर्त्तमानत्वात् सङ्ख्या द्रव्यगतैव गुणादिषु उपचर्यते ॥ २७७ ॥

**अत एव सङ्ख्याव्यवहारस्य[1] सङ्ख्याप्रत्यासत्तिनिबन्धनत्वम् ॥२७८॥**

न सङ्ख्यासमवायनिबन्धनत्वमित्यर्थः ॥ २७८ ॥

कारणमुक्तं तल्लक्षयति—

**कार्योत्पादकत्वं कारणत्वम् ॥ २७९ ॥**

यद्वस्तु कार्यमुत्पादयति—कार्योत्पत्तौ उपयोगमागच्छति । यस्मिन् सति कार्यं भवति, असति न भवति तत्कारणम् ॥ २७९ ॥

कारणभेदांल्लक्षयति—

**स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम् ॥ २८० ॥**

स्वस्मिन्नात्मनि समवेतम्—अवयवावयविभावेन गुणगुणिभावेन वा मिश्रीभूतं कार्यं तस्योत्पादकं यत्तत् समवायिकारणं, यथा तन्तवः पटस्य, पटरूपस्य च पटः । उत्पादकत्वं समवायिकारणत्वमित्युक्ते कस्योत्पादकमिति साकाङ्क्षता, तन्निरासार्थं कार्योत्पादकत्वम् । समवायिकारणत्वमित्युक्ते घटप्रध्वंसाभावविधायिनि लकुटादौ निमित्तकारणेऽतिव्याप्तिः, तन्निरासार्थं समवेतेति । समवेतकार्योत्पादकत्वं समवायिकारणत्वमित्युक्ते रूपादावसमवायिकारणेऽतिव्याप्तिः, तदपि पटादिसमवेतस्य कार्यरूपस्य पटरूपस्योत्पादकं भवति तन्निरासार्थं स्वेति ॥ २८० ॥

**समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् ॥ २८१ ॥**

समवायिकारणेन प्रत्यासन्नं समवायसम्बन्धेन मिलितं तत् समवायिकारणप्रत्यासन्नं यथा सुखोत्पत्तौ आत्ममनःसंयोगः, सुखस्य असमवायिकारणं भवति । सुखस्य समवायिकारणमात्मा, तत्रात्ममनःसंयोगसमवेतोऽस्ति सुखोत्पत्तौ च कारणं[2] भवति अतः सोऽसमवायिकारणम् । अथवा[3] समवायिकारणप्रत्यासन्नम् इति मध्यमपदलोपी समासः यथा तन्तुरूपं पटरूपस्य असमवायिकारणम् । पटरूपस्य समवायिकारणं पटः, तस्य समवायिकारणं तन्तवः, तत्र प्रत्यासन्नं समवेतं तन्तुगतं[4] रूपम्, अतः समवायिकारण[5]-कारणप्रत्यासन्नं तन्तुरूपं पटरूपस्यासमवायिकारणम् । अवधृतं निश्चितं सामर्थ्यम्

---

१ 'सङ्ख्याव्यवहारस्य' इति क. जि. पुस्तकयो र्नास्ति । २ कारणं अ. १ । ३ अथ अ. १ । ४ तन्तुगत अ. १ । ५ समवायिकारणं अ. १ ।

अनन्यथासिद्धान्वयव्यतिरेकत्वं यस्य तत् अवधृतसामर्थ्यम्, यथा पटोत्पत्तौ तन्तुसंयोगः। अवधृतसामर्थ्यमसमवायिकारणमित्युक्ते निमित्तकारणेऽतिव्याप्तिः, तन्निवृत्त्यै समवायिकारण-प्रत्यासन्नेति। तथोक्ते रूपं रसस्यासमवायिकारणं स्यात्, तस्यापि समवायिकारणप्रत्या-सन्नत्वात्, तन्निवृत्त्यै अवधृतसामर्थ्यमिति ॥ २८१ ॥

**उभयविपरीतत्वं निमित्तकारणत्वम् ॥ २८२ ॥**

उभयाभ्यां समवायिकारणाऽसमवायिकारणाभ्यां यद्विपरीतं कारणं भवति तत् निमित्तकारणम्, यथा घटोत्पत्तौ चक्रचीवरादिकम् ॥ २८२ ॥

द्रव्याणि पृथिव्यादीनि पञ्च मूर्त्तानि, चत्वारि चाऽमूर्त्तानि, तत् किं मूर्त्तत्वं किं चामूर्त्तत्वमित्याह—

**इयत्तावच्छिन्नपरिमाणयोगो मूर्त्तत्वम् ॥ २८३ ॥**

इयत्ता—एतावन्मात्रता, तयाऽवच्छिन्नं व्याप्तं यत्परिमाणं तेन सह संयोगः सम्बन्ध-स्तन्मूर्त्तत्वम्। परिमाणयोगो मूर्त्तत्वमित्युक्ते विभुपरिमाणयोगोऽस्ति आकाशे तत्रातिव्याप्तिः, तन्निवृत्त्यर्थम् इयत्तावच्छिन्नेति ॥ २८३ ॥

**तदभावोऽमूर्त्तत्वम् ॥ २८४ ॥**

तस्य इयत्तावच्छिन्नपरिमाणस्य अभावः अमूर्त्तत्वम् ॥ २८४ ॥

सामग्रीं लक्षयति—

**कार्यायोगव्यवच्छिन्ना सामग्री ॥ २८५ ॥**

कार्यस्य अयोगः अनुत्पत्तिस्तेन व्यवच्छिन्ना भिन्नीकृता सामग्री, यस्यां सत्यां कार्यमुत्पद्यत एव, असत्यां नोत्पद्यत एव सा सामग्री। एतावता सकलकारणमेलनं सामग्री ॥ २८५ ॥

**सञ्ज्ञामात्रेण पदार्थानामभिधानमुद्देशः ॥ २८६ ॥**

सञ्ज्ञामात्रेण—नाममात्रेण, न असाधारणधर्मादिना, यदभिधानं कथनं स उद्देशः। एतयोः प्रासङ्गिकत्वात् लक्षणमुक्तम् ॥ २८६ ॥

नवसु द्रव्येषु यावन्तो गुणा यस्मिन् द्रव्ये वर्त्तन्ते तत् कथयति—

**रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व-संस्काराः। एते चतुर्दश गुणाः पृथिवीसमवेताः ॥ २८७ ॥**

---

१ परिमाणयोगित्वम् क नि.। २ कथनमुद्देशः अ. १। ३ अत्र 'एते चतुर्दश-गुणाः', 'एते एकादश गुणाः' इत्यादिकाः पाठाः क. नि. पुस्तकयोर्न सन्ति। द्वयोरप्यादर्श-पुस्तकयोः सन्ति, अतोऽत्र गृहीताः।

**रूप-रस-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-[1]गुरुत्व-द्रवत्व-स्नेह-संस्काराः । [2]एते चतुर्दश गुणा अप्सु समवेताः ॥ २८८ ॥**

**रूप-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-द्रवत्व-संस्काराः । [3]एते एकादश गुणास्तेजःसमवेताः ॥ २८९ ॥**

**स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-संस्काराः । [4]एते नव गुणा वायुसमवेताः ॥ २९० ॥**

**सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-शब्दाः । [5]एते षड्गुणाः आकाशसमवेताः ॥ २९१ ॥**

**सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभागाः । [6]एते पञ्च गुणाः कालदिग्समवेताः ॥ २९२ ॥**

**सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न-धर्मा-ऽधर्म-भावनाः । [7]एते चतुर्दश गुणाः आत्मसमवेताः ॥ २९३ ॥**

**सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-संस्काराः । [8]एते अष्टौ गुणा मनःसमवेताः ॥ २९४ ॥**

गुणानां समवायमुक्त्वा अन्येषामपि पदार्थानां यत्र समवायस्तत्कथयति—

**कर्म्म मूर्त्तद्रव्यसमवेतमनित्यमेव ॥ २९५ ॥**

कर्म चलनात्मकं मूर्तेष्वेव द्रव्येषु समवेतं भवति । अमूर्त्तानां चलनायोगात् । तच्चानित्यमेव क्रियायाः सर्वत्र क्षणं विनश्वरत्वात् ॥ २९५ ॥

**सामान्यं द्रव्यगुणकर्म्मसमवेतम् ॥ २९६ ॥**

सामान्यं सत्तादिकं द्रव्ये गुणे कर्म्मणि च समवेतं, न सामान्यादिषु, सामान्ये सामान्याङ्गीकारे आत्माश्रयः, सामान्यान्तराङ्गीकारेऽनवस्था, विशेषेषु सामान्याङ्गीकारे

---

१ द्रवत्व-गुरुत्वं अ. १ । २, ३, ४, ५ ६, ७, ८. अत्र 'एते चतुर्दशगुणाः' 'एते एकादश गुणाः' इत्यादिकाः पाठाः क जि पुस्तकयोर्न सन्ति । द्वयोरप्यादर्शपुस्तकयोः सन्ति, अतोऽत्र गृहीताः ।

स्वरूपहानिः, समवायाभावयोः सामान्याङ्गीकारेऽसम्बन्धः सम्बन्धाभावो बाधकः, तस्मात् सामान्यं द्रव्यादिषु त्रिष्वेव समवेतमिति ॥ २९६ ॥

**विशेषा नित्यद्रव्यसमवेताः ॥ २९७ ॥**

विशेषाणां यावन्नित्यद्रव्यवृत्तित्वान्नित्येष्वेव समवेताः ॥ २९७ ॥

**समवायाभावौ तु असमवेतावेव ॥ २९८ ॥**

समवायः क्वचिन्न समवेतः सम्बन्धाऽभावात् । तेनैव समवायेन समवेतत्वाङ्गी-क्रियमाणे आत्माश्रयः, समवायान्तरेण च अनवस्था । अभावोऽप्यसमवेतः अभावे भाव-रूपस्य समवायस्य असम्भवात् ॥ २९८ ॥

**द्रव्यं तु कार्यरूपं स्वाऽवयवसमवेतम् ॥ २९९ ॥**

कार्य्यरूपं द्रव्यं द्व्यणुकादिघटपटादिकं स्वावयवेषु स्वसमवायिकारणेषु समवेतं यथा पटस्तन्तुषु, घटो मृत्पिण्डे, शरीरं करचरणादिके ॥ २९९ ॥

**अकार्यद्रव्यमसमवेतमेव ॥ ३०० ॥**

अकार्यद्रव्यं नित्यद्रव्यं परमाण्वाकाशकालदिगात्ममनोलक्षणम् । तत् असमवेतमेव क्वचिदनाश्रितमेव ॥ ३०० ॥

अथ सर्वेषां कार्यरूपाणां वस्तूनां विनाशो भवति । स कुतः कुतो भवतीत्या-शङ्क्याह—

**द्रव्यस्य समवाय्यसमवायिकारणविनाशाभ्यां विनाशः ॥ ३०१ ॥**

द्रव्यस्य कार्यरूपस्य क्वचित्समवायिकारणनाशान्नाशः । यथा तन्तूनां ज्वलनादिना प्रध्वंसे पटध्वंसः । क्वचिदसमवायिकारणनाशात् । यथा पटस्य तन्तूनां संयोगोऽसमवायि-कारणं भवति, तस्य नाशे पटस्यापि नाशः स्यात् ॥ ३०१ ॥

**गुणस्य समवाय्यसमवायिनिमित्तकारणनाशविरोधिगुणेभ्यः ॥३०२॥**

गुणस्य विनाशः क्वचित्समवायिकारणविनाशाद् भवति, यथा पटस्य प्रध्वंसे पटरूपप्रध्वंसः । क्वचिदसमवायिकारणविनाशाद्विनाशः, यथा पटरूपस्य असमवायिकारणं तन्तुरूपं, तस्य विनाशात् पटरूपविनाशः । क्वचिन्निमित्तकारणविनाशाद्विनाशः, यथा

---

१ विशेषास्तु क नि । २ तु क. नि पुस्तकयोर्नास्ति । ३ इत ऊर्ध्वम् 'अ २' पुस्तकस्य पत्राणि नोपलभ्यन्ते अतः पाठभेदा न दत्ताः । ४ अकार्यं अ. १ । ५ द्रव्यासम-वेतमेव अ. १ । ६ विनाशस्तु द्रव्यस्य समवाय्यसमवायिकारणनाशाभ्याम् । क नि । ७ गुणस्य तु क नि । ८ गुणेभ्यो नाशः क. गुणेभ्यो विनाशः नि. ।

परत्वाऽपरत्वद्वित्वपृथक्त्वादिषु अपेक्षाबुद्धिर्निमित्तकारणं तस्या विनाशाद्विनाशः । अथवा क्वचिद् विरोधिगुणेभ्यो गुणस्य विनाशः, यथा विभागात् संयोगविनाशः; दुःखात्सुख-विनाशः ॥ ३०२ ॥

**कर्म्मणः समवायिकारणोत्तरसंयोगाभ्यां विनाशः ॥ ३०३ ॥**

कर्म्मणो विनाशः क्वचित्समवायिकारणविनाशात् यथा गच्छतो बाणस्यान्तराल-बाणादिना विनाशे जाते सति गतिविनाशः । क्वचिदुत्तरसंयोगात् विनाशः यथा बाणादावेव भूम्यादिसंयोगेन गतिविच्छेदः ॥ ३०३ ॥

सामान्यविशेषसमवायानां नित्यत्वाद्विनाशो नास्ति ॥

**प्रागभावस्य तु प्रतियोग्युत्पादकसामग्रीतः ॥ ३०४ ॥**

प्रतियोगी विरोधी सम्बन्धी यथा घटाभावस्य घटः तदुत्पादिका सामग्री तस्याः प्रागभावस्य विनाशो भवति । यथा मृत्पिण्डचक्रचीवरसकलकारणसमूहात् घट-प्रागभावस्य विध्वंसो भवति ॥ ३०४ ॥

**अन्योन्याभावस्य प्रतियोगिविनाशकारणात् ॥ ३०५ ॥**

प्रतियोगी विरोधी तस्य विनाशकारणात् अन्योन्याभावस्य विनाशः स्यात् । यथा घटः पटो न भवति इति अन्योन्याभावः, तयोर्घटपटयोर्मध्येऽन्यतरस्य द्वयोर्वा प्रतियोगिनोर्विनाशकारणात् अन्योन्याभावस्यापि विनाशः स्यात् । अत्यन्ताभावप्रध्वंसा-भावयोस्तु नित्यत्वाद्विनाशो नास्ति ॥ ३०५ ॥

अथ सर्वेषां पदार्थानामुत्पत्तिमाह—

**उत्पत्तिस्तु द्रव्यगुणकर्म्मणां समवाय्यसमवायिनिमित्तकारणेभ्यः ॥ ३०६ ॥**

द्रव्यस्य पटादेरुत्पत्तिः समवायिकारणात् तन्त्वादेः; असमवायिकारणात् तन्तु-संयोगात्; निमित्तकारणात् कौलिकवेमतुर्यादिकात् । गुणस्य च रूपादेः समवायिकारणं पटादि; असमवायिकारणं तन्तुगतरूपादि, निमित्तकारणम् ईश्वरेच्छाऽदृष्टादि; तेभ्य उत्पद्यते गुणः । कर्म्मणः समवायिकारणं बाणादि, असमवायिकारणं धनुःसंयोगादि, निमित्त-कारणं प्रयत्नादि, तेभ्य उत्पत्तिः ॥ ३०६ ॥

---

१ समवाय्यसमवायिनिमित्तकारणनाशोत्तरसंयोगाभ्यां क. मि. । जिनवर्धनीकारसम्मतोऽयं पाठः किन्तु स मितभाषिणीकारासम्मतः । मि. भा. पृ ८८ 'क' पुस्तकस्था । २ 'तु' क. मि पुस्तकयोर्नास्ति । ३ घटोत्पादिकासामग्रीतः भा. पा. टि. । ४ नाशकारणात् क ।

तत्र समवायिकारणं किमित्याशङ्क्याह—

**समवायिकारणं त्रयाणां द्रव्यमेव ॥ ३०७ ॥**

त्रयाणां द्रव्यगुणकर्मणां द्रव्यमेव समवायिकारणं भवति । द्रव्यसमवेतत्वेनैव सर्वेषामुत्पादात् ॥ ३०७ ॥

असमवायिकारणं किमित्याशङ्क्याह—

**असमवायिकारणं द्रव्यकर्मणोः संयोग एव ॥ ३०८ ॥**

द्रव्यस्यासमवायिकारणं संयोगः यथा पटोत्पत्तौ तन्तुसंयोगः । बाणादिकर्म्मोत्पत्तौ धनुर्ज्यासंयोगाद्यसमवायिकारणम् ॥ ३०८ ॥

**गुणस्य त्वसमवायिकारणं समानजातीयं क्वचिदसमानजातीयं गुणान्तरम्, क्वचित्कर्म्म ॥ ३०९ ॥**

गुणस्यासमवायिकारणं क्वचित्समानजातीयं गुणान्तरं भवति, यथा पटगतरूपस्य तन्तुगतं रूपम् । क्वचिदसमानजातीयं गुणान्तरमसमवायिकारणं भवति, यथा पार्थिवपरमाणुगतरूपादीनामग्निसंयोगः । क्वचित्कर्म्मासमवायिकारणम्, यथा कर्म्मजसंयोगस्य कर्म्म असमवायिकारणं स्यात् ॥ ३०९ ॥

निमित्तकारणं किमित्याशङ्क्याह—

**निमित्तकारणं सर्वेषामीश्वरेच्छाऽदृष्टादि ॥ ३१० ॥**

सर्वेषां द्रव्यगुणकर्म्मणां निमित्तकारणम् ईश्वरो जगत्कर्त्ता, अदृष्टं धर्म्माऽधर्म्मादि । आदिशब्दात् पुरुषप्रयत्नप्रभृतिकम् ॥ ३१० ॥

सामान्यविशेषसमवायानां नित्यत्वादुत्पत्तिर्नास्ति । अथाऽभावस्याह—

**अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेव केवलादुत्पत्तिः ॥ ३११ ॥**

अभावस्य समवायिकारणं नास्ति तस्य क्वचिदप्यसमवेतत्वात् । असमवायिकारणमपि नास्ति, समवायिकारणप्रत्यासन्नस्यैवासमवायिकारणत्वात्, अभावस्य समवायिकारणाभावात्, किन्तु निमित्तकारणादेव केवलादन्योन्याभाव उत्पद्यते, यथा घटोत्पत्तौ घटान्योन्याभावोत्पत्तिः । प्रध्वंसाभावो लकुटादिघातात् ॥ ३११ ॥

अथ किमपि वस्तूनां लक्षणं नोक्तं तत्राह—

**अपरं तु सकलं शास्त्रं सुबोधमिति ॥ ३१२ ॥**

यदत्र लक्षणादिकं नोक्तं तत्सुबोधं सुखबोधमिति स्वयं ज्ञेयम् ॥ ३१२ ॥

---

१ तत्र समवायिकारणं क, नि । २ °ष्टादीनि क. नि ।

अत्र विशेषणविशिष्टत्वं सर्वत्र श्रूयते तत्किमित्याशङ्क्याह—

**वैशिष्ट्यमन्यव्यावृत्तिः ॥ ३१३ ॥**

येन विशेषणेन अन्येभ्यः पदार्थान्तरेभ्यो व्यावृत्तिः क्रियते तद्वैशिष्ट्यम् । यथा 'गन्धवती पृथिवी' इत्यत्र गन्धवत्त्वं वैशिष्ट्यमन्येभ्यो जलादिभ्यो व्यावर्तकं भवति ॥ ३१३ ॥

किं वा विशेषणं किं वा उपलक्षणमित्याशङ्क्याह—

**समानाधिकरणं व्यावर्तकं विशेषणम् ॥ ३१४ ॥**

यत्समानाधिकरणम्—एकविभक्त्यन्तपदवाच्यम् , यद्व्यावर्तकं व्यवच्छेदकं तद्विशेषणं यथा नीलमुत्पलमिति । समानाधिकरणं विशेषणमित्युक्ते घटः पट इत्यादौ वचनेऽतिव्याप्तिः, तन्निवृत्त्यर्थं व्यावर्तकमिति । व्यावर्तकं विशेषणमित्युक्ते उपलक्षणेऽतिव्याप्तिः, तन्निवृत्त्यर्थं समानाधिकरणमिति ॥ ३१४ ॥

समानाधिकरणमित्युक्तं तत्किमित्याह—

**एकविभक्त्यन्तपदवाच्यत्वं समानाधिकरणत्वम् ॥ ३१५ ॥**

एकविभक्तिः प्रथमादिका अन्ते यस्य तत् एकविभक्त्यन्तं पदं, तेन वाच्यत्वं कथ्यमानत्वं समानाधिकरणत्वं यथा देवदत्तोऽयं दण्डीति ॥ ३१५ ॥

**व्यधिकरणमवच्छेदकमुपलक्षणम् ॥ ३१६ ॥**

व्यधिकरणं भिन्नविभक्त्यन्तपदवाच्यम्, अवच्छेदकमन्यव्यावर्तकम्, तदुपलक्षणं यथा जातिमत्त्वे सति अचलनात्मकत्वे सति समवायिकारणत्वरहितो गुणः ॥ ३१६ ॥

**भिन्नविभक्त्यन्तपदवाच्यत्वं वैयधिकरण्यम् ॥ ३१७ ॥**

भिन्ना विभक्तिरन्ते यस्य पदस्य तत् तथा, तेन वाच्यत्वं कथनीयत्वं, तत् वैयधिकरण्यं यथा एकत्र विशेषणे सप्तम्यन्तं विशेष्ये प्रथमान्तम् ॥ ३१७ ॥

समानाधिकरणमित्युक्तं वैयधिकरणं चेत्युक्तम् । तत्र पूर्वमधिकरणमेव किमित्याशङ्क्याह—

**जातिप्रत्यासत्तिरधिकरणत्वम् ॥ ३१८ ॥**

जात्या स्वभावेन प्रत्यासत्तिराश्रितत्वमधिकरणत्वम् ॥ ३१८ ॥

विभुत्वं किमित्याशङ्क्याह—

**समस्तमूर्तद्रव्यसंयोगित्वं विभुत्वम् ॥ ३१९ ॥**

समस्तैर्मूर्तैर्द्रव्यैः सह यस्य संयोगः स्यात् तदाकाशादिकं व्यापकं द्रव्यं विभु कथ्यते । संयोगित्वं विभुत्वमित्युक्ते कैः सह संयोगित्वमिति साकाङ्क्षता, तन्निवृत्त्यर्थं द्रव्य-

---

१ व्यधिकरणं सद् व्यावर्तकम् क. नि. । २ स्वभावसम्बन्धेन अ. १ पा. टि. । ३ सकलमूर्तसंयोगित्वं क. नि ।

संयोगित्वमिति । तथोक्ते शरीरादावतिव्याप्तिः तदपि द्रव्येणात्मना सह संयोग्यस्ति, तन्निवृत्त्यर्थं मूर्त्तेति । तथोक्ते घटादावतिव्याप्तिः, तन्निवृत्त्यर्थं समस्तेति । समस्तद्रव्य-संयोगित्वमित्युक्ते असम्भवि लक्षणं स्यात् । नह्याकाशादिकं समस्तैर्मूर्तामूर्त्तैर्द्रव्यैः सह संयोग्यस्ति किन्तु मूर्त्तैरेव सह, अमूर्त्तानां परस्परसंयोगे संयोगस्य सादेश्यप्रदेशवर्त्तित्वं व्याहन्यते तन्निवृत्त्यै मूर्त्तेति ॥ ३१९ ॥

का युतसिद्धिः का वाऽयुतसिद्धिरिति तल्लक्षयति—

**विद्यमानयोः सम्बन्धो युतसिद्धिः ॥ ३२० ॥**

स्वावयवेषु पृथक्त्वेन स्थितयोर्विद्यमानयोर्यः परस्परसम्बन्धः सा युतसिद्धिः, यथा हस्तपुस्तकसंयोगः ॥ ३२० ॥

**अविद्यमानयोराधाराधेययोः सम्बन्धोऽयुतसिद्धिः ॥ ३२१ ॥**

अविद्यमानं च विद्यमानं च अविद्यमानविद्यमाने; तयोरेकशेषात् अविद्यमानयोरिति । एतावता कारणं विद्यमानं भवति, कार्यं चाविद्यमानमुत्पद्यते तदाश्रितत्वेनैव[1] जायते, यथा तन्तुपटयोः । नहि तन्तुभिर्विना पटः क्वचित् पृथग्भवति । अतः अविद्यमानयोराधाराधेय-भूतयोर्यः सम्बन्धः सा अयुतसिद्धिः, सा च समवायसम्बन्ध उच्यते । तथा चोक्तम्—अवयवावयविनोर्गुणगुणिनोः क्रियातद्वतोः जातिव्यक्त्योर्विशेषतद्वतोः समवायः सम्बन्धः । एतावता संयोगो युतसिद्धिः समवायोऽयुतसिद्धिरिति भावः ॥ ३२१ ॥

शास्त्रं किं स्यादित्याशङ्क्याह—

**श्रेयःसाधनाभिधायकं[2] शास्त्रम् ॥ ३२२ ॥**

श्रेयसो मोक्षस्य यत्साधनम्—असाधारणं कारणं तदभिधायकं शास्त्रम् । व्यावृत्तिः सर्वत्रापि सुगमतया स्वयं कार्या ॥ ३२२ ॥

प्रान्तमङ्गलमाचरति—

**सप्तद्वीपा धरा यावत् यावत् सप्तधराधराः ।**
**तावत् सप्तपदार्थीयमस्तु वस्तुप्रकाशिनी ॥ १ ॥**

यावत् इयं धरा पृथिवी सप्तद्वीपयुताऽस्ति, यावदमी सप्त कुलाचलाः सन्ति तावदियं सप्तपदार्थी वस्तुप्रकाशिनी अस्तु ॥

**इति श्रीखरतरगच्छे श्रीजिनराजसूरिपट्टे जिनवर्धनसूरिविरचिता सप्तपदार्थीटीका समाप्ता ॥ ग्रन्थाग्रम् १८४८ ॥ शुभं भवतु ॥ सं० १५२७ वर्षे चैत्रसुदि ७ गुरौ श्रीपत्तने श्रीपूर्णिमापक्षे पूज्यराजश्रीजयप्रभसूरिभिः शिष्ययशस्तिलकमुनिसमध्यापनाय सप्तपदार्थीटीका लिलिखे परोपकृतये च ॥**

---

१ कारणाश्रितत्वेनैवोत्पद्यते अ. १ पा. टि. । २ साधनश्रेयोऽभिधायकं क ।

# अकारादिक्रमेण सप्तपदार्थीसूत्रपाठः ।


| | सूत्रम् | पत्राङ्काः | सूत्राङ्काः |
|---|---|---|---|
| १ | अकार्यद्रव्यमसमवेतमेव । | ८४ | ३०० |
| २ | अङ्गवैकल्यप्राभासहेतुत्वम् । | ७३ | ३४२ |
| ३ | अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्षप्रमा । | ६८ | २१७ |
| ४ | अणुत्वादीनामणुत्वादिकम् । | ६६ | २०५ |
| ५ | अत एव सङ्ख्याव्यवहारस्य सङ्ख्याप्रत्यासत्तिनिबन्धनत्वम् । | ८१ | २७८ |
| ६ | अतत्त्वज्ञानमप्रमा । | ६८ | ३१४ |
| ७ | अतीतावस्थावच्छिन्नं वस्तुग्रहणं प्रत्यभिज्ञानम् । | ७७ | २५६ |
| ८ | अत्र गन्ध-संयोग-विभाग-परत्वाऽपरत्व-सुख-दुःख-द्वेष-संस्कार-धर्मा-ऽधर्म-शब्दा अनित्यैकरूपाः । | ३८ | ८६ |
| ९ | अधर्मत्वसामान्यवान् दुःखाऽसाधारणं कारणमधर्म्मः । | ५६ | १६० |
| १० | अधर्मः फलावसानो नमस्कारादिनाश्यश्च । | ३७ | ८४ |
| ११ | अधर्मोत्पादकत्वं निषिद्धत्वम् । | ७९ | २७० |
| १२ | अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः । | ५९ | १७२ |
| १३ | अनादिः सान्तः प्रागभावः । | ५९ | १७० |
| १४ | अनवधारणं ज्ञानं संशयः । | ६८ | २१५ |
| १५ | अनालिङ्गितोभयकोटयनवधारणं ज्ञानमनध्यवसायः । | ७७ | २६० |
| १६ | अनित्यत्वं प्रध्वंसवत्त्वम् । | ६० | १७५ |
| १७ | अनित्यानां कारणत्वं कार्यत्वं च । | ४३ | १०६ |
| १८ | अनिष्टव्यापकप्रसञ्जनं तर्कः । | ७५ | २५० |
| १९ | अनुभवोऽपि प्रमा अप्रमा च । | २९ | ५९ |
| २० | अनुमितिरपि त्रिविधा । | ३० | ६४ |
| २१ | अनुमितिप्रमायोगव्यवच्छिन्नं प्रमाणमनुमानम् । | ६९ | २२२ |
| २२ | अनेकेषामेकक्षणसम्बन्धो यौगपद्यम् । | ६४ | १९१ |
| २३ | अन्धकारोऽपि भासामभाव एव । | ४० | ९७ |
| २४ | अन्ये नित्यानित्यरूपाः । | ३८ | ८७ |
| २५ | अन्ये स्वाश्रयव्यापकाः । | ३८ | ९० |
| २६ | अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेव केवलादुत्पत्तिः । | ८६ | ३११ |
| २७ | अन्योन्याभावस्य प्रतियोगिविनाशकारणात् । | ८५ | ३०५ |
| २८ | अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति । | ३० | ६६ |
| २९ | अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं कर्मापक्षेपणम् । | ५७ | १६३ |
| ३० | अपरं तु सकलं शास्त्रं सुबोधमिति । | ८६ | ३१२ |
| ३१ | अपरत्वसामान्ययोगि अपरव्यवहारासाधारणं कारणमपरत्वम् । | ५३ | १४८ |
| ३२ | अपरे भेदाः स्वयमूहनीयाः । | ४३ | १०८ |

| | | | |
|---|---|---|---|
| ३३ | अप्त्वजातिमत्यः शीतस्पर्शा आपः । | ४९ | १३० |
| ३४ | अप्रमापि संशयो विपर्ययश्च । | २९ | ६० |
| ३५ | अभावस्तु प्रागभाव-प्रध्वंसाभावाऽत्यन्ताभावाऽन्योन्याभाव-लक्षणश्चतुर्विधः । | १० | ९ |
| ३६ | अवधारणरूपाऽतत्त्वज्ञानं विपर्ययः । | ६८ | २१६ |
| ३७ | अविद्यमानयोराधाराधेययोः सम्बन्धोऽयुतसिद्धिः । | ८८ | ३२१ |
| ३८ | अव्यापकत्वं स्वाभावसादेश्यम्, तदभावो व्यापकत्वम् । | ७९ | २६८ |
| ३९ | असमवायिकारणं द्रव्यकर्मणोः संयोग एव । | ८६ | ३०८ |
| ४० | अस्मृतिरूपं ज्ञानमनुभवः । | ६७ | २१२ |
| ४१ | आकाशस्तु घटाकाशादिभेदभिन्नोऽनन्त एव । | २१ | ३७ |
| ४२ | आकाशादिपञ्चकं नित्यमेव, अपरं नित्यानित्यम् । | २५ | ४४ |
| ४३ | आकाशादित्रयं वस्तुतस्त्वेकैकमेवोपाधिभेदान्नानाभूतम् । | २२ | ४० |
| ४४ | आकुञ्चनत्वजातिमद्वक्रत्वापादकं कर्माऽऽकुञ्चनम् । | ५७ | १६४ |
| ४५ | आत्मत्वसामान्यवान् बुद्धिगुणाश्रय आत्मा । | ५१ | १३६ |
| ४६ | आत्मनो भोगकारणं विषयः । | ६१ | १८४ |
| ४७ | आत्मा तु परमात्मा क्षेत्रज्ञश्चेति द्विविधः । | २३ | ४१ |
| ४८ | आदित्यपरिवर्त्तनोत्पाद्यं परत्वाऽपरत्वं कालकृतम् । आदित्य-संयोगानुत्पाद्यं परत्वाऽपरत्वं दिक्कृतम् । | ६७ | २१० |
| ४९ | आदित्यपरिवर्तनोत्पाद्यपरत्वाऽपरत्वाऽसमवायिकारणाधारः परत्वाऽपरत्वानधिकरणं कालः । | ५० | १३४ |
| ५० | आदित्य-संयोगानुत्पाद्यपरत्वाऽपरत्वासमवायिकारणाधारः परत्वाऽपरत्वानधिकरणं दिक् । | ५० | १३५ |
| ५१ | आपोऽपि परमाणुलक्षणाः कार्यलक्षणाश्च । | १४ | १६ |
| ५२ | आरोपितनीलरूपोऽभावोऽन्धकारः । | ८० | २७४ |
| ५३ | इच्छात्वसामान्यवती अर्थित्वलक्षणा इच्छा । | ५४ | १५२ |
| ५४ | इच्छाऽपि साध्यविषया साधनविषया च, द्वेषोऽपि साध्यविषयः साधनविषयश्च । | ३५ | ७७ |
| ५५ | इच्छामात्राधीनसाधनसाध्यं सुखं स्वर्गस्थम् । | ७८ | २६२ |
| ५६ | इदानीं लक्षणाधीनत्वात्तत्त्वज्ञानस्य लक्षणमेवोच्यते । | ४५ | ११५ |
| ५७ | इन्द्रियं गन्धव्यञ्जकम् । | १३ | १४ |
| ५८ | इन्द्रियं रसव्यञ्जकम् । | १५ | २० |
| ५९ | इन्द्रियं रूपव्यञ्जकम् । | १६ | २६ |
| ६० | इन्द्रियं स्पर्शव्यञ्जकम् । | १९ | ३२ |
| ६१ | इयत्तावच्छिन्नपरिमाणयोगो मूर्तत्वम् । | ८२ | २८३ |
| ६२ | उत्क्षेपणत्वजातिमदूर्ध्वदेशसंयोगकारणं कर्मोत्क्षेपणम् । | ५७ | १६२ |
| ६३ | उत्क्षेपणादयो विहितनिषिद्धोदासीनरूपाः । | ३९ | ९१ |

| | | | |
|---|---|---|---|
| ६४ | उत्पत्तिस्तु समवाय्यसमवायिनिमित्तकारणेभ्यः । | ८५ | ३०६ |
| ६५ | उपजीव्यप्रमाणनिश्चितसाध्यविपरीतत्वं कालात्ययापदिष्टत्वम् । | ७५ | २४९ |
| ६६ | उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः । | ७० | २२७ |
| ६७ | उपाधिरूपं पाचकत्वादि । | ३९ | ९४ |
| ६८ | उभयविपरीतत्वं निमित्तकारणत्वम् । | ८२ | २८२ |
| ६९ | उभयविपरीतत्वमुदासीनत्वम् । | ७९ | २७१ |
| ७० | उभयाङ्गानि पक्षधर्मत्वम्, सपक्षे सत्त्वम्; विपक्षाद् व्यावृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति । | ३२ | ६९ |
| ७१ | उभयासाधनं ज्ञानमुपेक्षा । | ७७ | २५९ |
| ७२ | ऊहानध्यवसाययोस्तु संशय एव । | ३४ | ७४ |
| ७३ | ऋजुत्वापादकः संस्कारः स्थितिस्थापकः । | ७९ | २६७ |
| ७४ | एकत्वादीनामेकत्वादिकम् । | ६६ | २०४ |
| ७५ | एकविभक्त्यन्तपदवाच्यत्वं समानाधिकरणत्वम् । | ८७ | ३१५ |
| ७६ | एतेषां तत्त्वज्ञानं निःश्रेयसहेतुः । | ४३ | १०९ |
| ७७ | एतेषु च मध्ये नित्यानां कारणत्वमेव । | ४३ | १०५ |
| ७८ | एवं प्रत्यभिज्ञा-हानोपादानोपेक्षाज्ञानानामपि । | ३४ | ७३ |
| ७९ | एवमन्यस्यापि पदार्थस्य सतोऽत्रैवान्तर्भावः । | ४२ | १०३ |
| ८० | एवं सर्वत्रापि लक्षणे प्रयोगो द्रष्टव्यः । | ४६ | ११८ |
| ८१ | कर्म्म मूर्त्तद्रव्यसमवेतमनित्यमेव । | ८३ | २९५ |
| ८२ | कर्म्म कर्म्मत्वजातियोगि, आद्यसंयोगविभागाऽसमवायिकारणं चेति । | ४८ | १२४ |
| ८३ | कर्म्मजः संयोगश्चेति । | २८ | ५४ |
| ८४ | कर्म्मजः संस्कारो वेगः । | ७८ | २६५ |
| ८५ | कर्म्मजो विभागश्चेति । | २९ | ५६ |
| ८६ | कर्म्मणः समवायिकारणोत्तरसंयोगाभ्यां विनाशः । | ८५ | ३०३ |
| ८७ | कर्माण्युत्क्षेपणाऽपक्षेपणा-ऽऽकुञ्चन-प्रसारण-गमनानि पञ्चैव । | ८ | ५ |
| ८८ | कर्म्मासमवायिकारणः संयोगः कर्म्मजः । | ६६ | २०६ |
| ८९ | कर्म्मासमवायिकारणो विभागः कर्म्मजः । | ६७ | २०८ |
| ९० | कार्यायोगव्यवच्छिन्ना सामग्री । | ८२ | २८५ |
| ९१ | कार्योत्पादकत्वं कारणत्वम् । | ८१ | २७९ |
| ९२ | कालस्तु उत्पत्तिस्थितिविनाशलक्षणस्त्रिविधः । | २१ | ३८ |
| ९३ | केवलव्यतिरेकी हेतुविशेषो लक्षणम् । | ४६ | ११६ |
| ९४ | गन्धत्वजातियोगी घ्राणग्राह्यो गुणो गन्धः । | ५२ | १४० |
| ९५ | गन्धयोः सुरभित्वासुरभित्वे । | ६६ | २०२ |
| ९६ | गन्धोऽपि द्विविधः । | २६ | ४७ |
| ९७ | गमनत्वजातिमदनियतदेशसंयोगकारणं कर्म्म गमनम् । | ५७ | १६६ |
| ९८ | गुणत्वजातियोगी गुणः । | ४८ | १३१ |

| | | | |
|---|---|---|---|
| ९९ | गुणस्य स्वसमवायिकारणं समानजातीयं क्वचिदसमानजातीयं गुणान्तरं क्वचित्कर्म । | ८६ | २०९ |
| १०० | गुणवत्समवायिकारणं चेति । | ४७ | १२१ |
| १०१ | गुणस्य समवाय्यसमवायिनिमित्तकारणनाशविरोधिगुणेभ्यः । | ८४ | ३०२ |
| १०२ | गुणादिषु च सङ्ख्याव्यवहारः सङ्ख्याप्रत्यासत्तिनिबन्धनः । | ८० | २७७ |
| १०३ | गुणास्तु रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-बुद्धि-सुख-दुःखेच्छा-द्वेष-प्रयत्न गुरुत्व-द्रवत्व-स्नेह-धर्मा-ऽधर्म-शब्दाश्चतुर्विंशतिरेव । | ७ | ४ |
| १०४ | गुरुत्वजातिमदेकवृत्ति आद्यपतनाऽसमवायिकारणं गुरुत्वम् । | ५४ | १५५ |
| १०५ | गुरुत्वं समाहाररूपमेकावयविनिष्ठं च । | ३६ | ७९ |
| १०६ | जलमात्रेन्धनं तेजो दिव्यम् । | ६२ | १८६ |
| १०७ | जातिप्रत्यासत्तिरधिकरणत्वम् । | ८७ | ३१८ |
| १०८ | जातिमत्त्वेऽचलनात्मकत्वे सति समवायिकारणरहितत्वेति । | ४८ | १२३ |
| १०९ | जातिः सत्ता-द्रव्यत्व-गुणत्व-कर्मत्वादि । | ३९ | ९३ |
| ११० | ज्ञातता ज्ञानसम्बन्ध एव । | ४२ | १०२ |
| १११ | ज्ञानजः संस्कारो भावना । | ७८ | २६६ |
| ११२ | ज्ञानसम्बन्धो ज्ञानविषयत्वम् । | ८० | २७५ |
| ११३ | ज्ञायमानकरणजन्यस्तत्त्वानुभवोऽनुमितिप्रमा । | ६८ | २१८ |
| ११४ | तच्च ईश्वरघ्राणरसनचक्षुःस्पर्शनश्रोत्रमनोलक्षणम् । | ६९ | २२१ |
| ११५ | तच्च प्रागभावप्रध्वंसाभावरहितस्वरूपत्वम् । | ६५ | १९५ |
| ११६ | तच्च व्याप्तिपक्षधर्मताविशिष्टं लिङ्गज्ञानम् । | ६९ | २२३ |
| ११७ | तच्च सुवर्णादि । | ६३ | १८९ |
| ११८ | तत्र द्रव्याणि पृथिव्यप्तेजो-वाय्वाकाश-काल-दिगात्म-मनांसि नवैव । | ६ | ३ |
| ११९ | तत्र पदार्थलक्षणं कृतमेव । | ४७ | ११९ |
| १२० | तत्र व्यापकवचनं प्रतिज्ञा । | ७३ | २३७ |
| १२१ | तत्र समवायिकारणम्, असमवायिकरणं निमित्तकारणं चेति त्रिविधम् । | ४३ | १०७ |
| १२२ | तत्त्वज्ञानेन नियमेनावच्छेद्यत्वं प्रमेयत्वम् । | ८० | २७६ |
| १२३ | तत्जमनारोपितरूपम् । | ४४ | ११० |
| १२४ | तत्त्वानुभवः प्रमा । | ६८ | २१३ |
| १२५ | तदपि लिङ्गं स्वार्थं परार्थं च । | ३१ | ६७ |
| १२६ | तदपि शरीरेन्द्रियविषयरूपम् । | १५ | २४ |
| १२७ | तदभावोऽमूर्त्तत्वम् । | ८२ | २८४ |
| १२८ | तद्दाभासाः असिद्ध-विरुद्धा-ऽनैकान्तिका-ऽनध्यवसित-काला-त्ययापदिष्ट-प्रकरणसमाः । | ३३ | ७० |
| १२९ | तन्मात्रावस्थायि क्षणिकम् । | ६४ | १९३ |

| | | | |
|---|---|---|---|
| १३० | तर्क-स्वप्नौ संशयविपर्ययावेव । | ३३ | ७१ |
| १३१ | तस्य ज्ञानमनुभवः । | ४४ | १११ |
| १३२ | ता अपि शरीरेन्द्रियविषयरूपाः । | १४ | १८ |
| १३३ | तादात्म्यनिषेधोऽन्योन्याभावः । | ५९ | १७३ |
| १३४ | तुल्यत्वेनाभावयोः प्रत्ययमावचनं प्रसञ्जनम् । | ७६ | २५१ |
| १३५ | ते च द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-ऽभावाख्याः सप्तैव । | ५ | २ |
| १३६ | तेजः संयोगोत्पाद्यत्वं नैमित्तिकत्वम् । | ७८ | २६४ |
| १३७ | तेजस्त्वजातियोगि उष्णस्पर्शं तेजः । | ४९ | १३१ |
| १३८ | तेजोऽपि नित्यमनित्यं च । | १५ | २२ |
| १३९ | दिग् ऐन्द्री, आग्नेयी, याम्या, नैर्ऋती, वारुणी, वायव्या, कौबेरी, ईशानी नागी, ब्राह्मी, रौद्री चेत्येकादश । | २२ | ३९ |
| १४० | दुःखं तु शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रकारम् । | ४५ | ११४ |
| १४१ | दुःखमपि दुःखकारणमात्रप्रभवम् । | ३५ | ७६ |
| १४२ | दुःखत्वसामान्यवत् निरुपाधि प्रतिकूलवेद्यं दुःखम् । | ५३ | १५१ |
| १४३ | दुःखसाधनं ज्ञानं हानम् । | ७७ | २५७ |
| १४४ | दृष्टान्तवचनमुदाहरणम् । | ७३ | २३९ |
| १४५ | द्रवत्वजातिमदेकवृत्ति स्यन्दनाऽसमवायिकारणं द्रवत्वम् । | ५४ | १५६ |
| १४६ | द्रवत्वं सांसिद्धिकं नैमित्तिकं च । | ३६ | ८० |
| १४७ | द्रव्यं तु कार्यरूपं स्वाऽवयवसमवेतम् । | ८४ | २९९ |
| १४८ | द्रव्यं द्रव्यत्वसामान्ययोगि । | ४७ | १२० |
| १४९ | द्रव्यसमवायिकारणमवयवः । | ६० | १७७ |
| १५० | द्रव्यस्य समवाय्यसमवायिकारण-विनाशाभ्यां विनाशः । | ८४ | ३०१ |
| १५१ | द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि । | ६० | १७८ |
| १५२ | द्वेषत्वजातिमान् प्रज्वलनात्मको द्वेषः । | ५४ | १५३ |
| १५३ | धर्मः प्रवर्तको निवर्तकश्च । | ३७ | ८३ |
| १५४ | धर्मत्वसामान्यवान् सुखाऽसाधारणं कारणं धर्मः । | ५५ | १५९ |
| १५५ | नित्यत्वं प्रध्वंसविरह । | ६० | १७४ |
| १५६ | नित्यः सम्बन्धः समवायः । | ४९ | १२७ |
| १५७ | निद्रादुष्टान्तःकरणजं ज्ञानं स्वप्नः । | ७६ | २५२ |
| १५८ | निमित्तकारणं सर्वेषामीश्वरेच्छाऽदृष्टादि । | ८६ | ३१० |
| १५९ | निरवयवः क्रियावान् परमाणुः । | ६० | १७६ |
| १६० | निरिन्धनं तेज आकरजम् । | ६२ | १८८ |
| १६१ | निर्बाधकं सामान्यं जातिः । | ७९ | २७२ |
| १६२ | निश्चितसाध्यवातीयाधिकरणत्वं सपक्षत्वम् । | ७२ | २३२ |

| | | | |
|---|---|---|---|
| १६३ | निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः। | ४४ | ११३ |
| १६४ | पक्षत्रयवृत्तिरनैकान्तिकः। | ७५ | २४६ |
| १६५ | पक्षधर्म्मता च व्याप्यस्य पक्षसम्बन्धः। | ७० | २२५ |
| १६६ | पक्षधर्मत्वेनानिश्चितत्वमसिद्धत्वम्। | ७४ | २४३ |
| १६७ | पक्षविपक्षमात्रस्पर्शित्वं विरुद्धत्वम्। | ७४ | २४४ |
| १६८ | पक्षव्यापकः सपक्षस्पर्शी विपक्षशून्योऽबाधितविषयोऽसत्प्रतिपक्षः केवलान्वयी। | ७१ | २२८ |
| १६९ | पक्षव्यापकः सपक्षशून्यो विपक्षाद् व्यावृत्तोऽबाधितविषयोऽसत्प्रतिपक्षः केवलव्यतिरेकी। | ७१ | २२९ |
| १७० | पक्षव्यापकः सपक्षस्पर्शी विपक्षाद् व्यावृत्तोऽबाधितविषयोऽसत्प्रतिपक्षोऽन्वयव्यतिरेकी। | ७१ | २३० |
| १७१ | परत्वमपि कालकृतं दिक्कृतं च अपरत्वमपि कालकृतं दिक्कृतं च। | २९ | ५७ |
| १७२ | परत्वसामान्ययोगि परत्वव्यवहाराऽसाधारणं कारणं परत्वम्। | ५३ | १४७ |
| १७३ | परमाणुरूपं नित्यं कार्यरूपमनित्यम्। | १५ | २३ |
| १७४ | परमाणुलक्षणा नित्या कार्यलक्षणा त्वनित्या। | ११ | ११ |
| १७५ | परमाणुलक्षणा नित्याः कार्यलक्षणास्त्वनित्याः। | १४ | १७ |
| १७६ | परमाणुलक्षणो नित्यः कार्यरूपस्त्वनित्यः। | १९ | २९ |
| १७७ | परमात्मा त्वीश्वर एक एव क्षेत्रज्ञा अस्मदादयोऽनन्ता एव। | २३ | ४२ |
| १७८ | परार्थं शब्दरूपत्वम्। | ७२ | २३५ |
| १७९ | परार्थाङ्गानि प्रतिज्ञा-हेतूदाहरणोपनय-निगमनानि। | ३१ | ६८ |
| १८० | परिमाणत्वसामान्ययोगि मानव्यवहाराऽसाधारणं कारण परिमाणम्। | ५२ | १४३ |
| १८१ | परिमाणमणु-महद्-दीर्घ-ह्रस्वभेदाच्चतुर्विधम्। | २७ | ५१ |
| १८२ | पार्थिवजलेन्धनं तेज औदर्यम्। | ६२ | १८७ |
| १८३ | पार्थिवमात्रेन्धनं तेजो भौमम्। | ६२ | १८५ |
| १८४ | पृथक्त्वजातियोगि पृथग्व्यवहाराऽसाधारणं पृथक्त्वम्। | ५२ | १४४ |
| १८५ | पृथक्त्वमेकानेकवृत्ति। | २८ | ५२ |
| १८६ | पृथिवीत्वसामान्यवती गन्धवती पृथिवी। | ४९ | १२९ |
| १८७ | पृथिवी नित्याऽनित्या च। | ११ | १० |
| १८८ | प्रतियोगिज्ञानाधीनज्ञानोऽभावः। | ४९ | १२८ |
| १८९ | प्रत्यक्षं सप्तप्रकारम्। | ३० | ६२ |
| १९० | प्रत्यात्मसमवेतधर्माधर्म्मोपगृहीतत्वं प्रत्यात्मनिष्ठत्वम्। | ६५ | १९९ |
| १९१ | प्रमाऽपि प्रत्यक्षमनुमितिश्च। | २९ | ६१ |
| १९२ | प्रमितिविषयाः पदार्थाः। | ४ | १ |
| १९३ | प्रयत्नत्वसामान्यवान् प्रयत्नव्यवहाराऽसाधारणं कारणं प्रयत्नः। | ५४ | १५४ |
| १९४ | प्रयत्नोत्पाद्यसाधनाधीनं सुखं सांसारिकम्। | ७८ | २६१ |

| | | | |
|---|---|---|---|
| १९५ | प्रयत्नोऽपि विहितप्रतिषिद्धोदासीनविषयः । | ३५ | ७८ |
| १९६ | प्रयोगस्तु लक्षणमितरेभ्यो भिद्यते, केवलव्यतिरेकिहेतुविशेषवचनत्वात् । यदितरेभ्यो न भिद्यते तत्केवलव्यतिरेकिहेतुविशेषवचनमपि न भवति यथा धूमवत्त्वम् । न च तथेद केवलव्यतिरेकिहेतुविशेषवचनं न भवति । तस्मादितरेभ्यो न भिद्यते इति न, किन्तु भिद्यत एव । | ४६ | ११७ |
| १९७ | प्रसारणत्वजातिमदृजुत्वापादकं कर्म्म प्रसारणम् । | ५७ | १६५ |
| १९८ | प्रागभाववत् कार्यम् । | ६१ | १७९ |
| १९९ | प्रागभावस्य तु प्रतियोग्युत्पादकं सामग्रीतः । | ८५ | ३०४ |
| २०० | प्रागभावादयः प्रतियोगिभेदादनन्ता एव । | ४० | ९५ |
| २०१ | प्राणश्च शरीराभ्यन्तरचारी । | २० | ३४ |
| २०२ | बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः । | ५३ | १४९ |
| २०३ | बुद्धिरपि स्मृतिरनुभवश्च । | २९ | ५८ |
| २०४ | बुद्धीच्छाप्रयत्ना उभयरूपाः । | ३८ | ८९ |
| २०५ | भावनाऽसाधारणकारणं ज्ञानं स्मृतिः । | ६७ | २११ |
| २०६ | भिन्नविभक्त्यन्तपदवाच्यत्वं वैयधिकरण्यम् । | ८७ | ३१७ |
| २०७ | भोगायतनमन्त्यावयवि शरीरम् । | ६१ | १८० |
| २०८ | मधुरादीनां मधुरत्वादिकम् । | ६६ | २०१ |
| २०९ | मनस्त्वजातियोगि स्पर्शशून्यं क्रियाधिकरणं मनः । | ५१ | १३७ |
| २१० | मनांसि प्रत्यात्मनियतत्वादनन्तान्येव । | २४ | ४३ |
| २११ | मध्यमत्वं परत्वाऽपरत्वाभावः । | ४० | ९६ |
| २१२ | यथासङ्ख्याया एव गुणे (-या गुणे एव) । | ४३ | १०४ |
| २१३ | यदवच्छिन्नात्मनि भोगस्तदायतनम् । | ६२ | १८२ |
| २१४ | योगजधर्मानुगृहीतस्य मनसो निरिन्द्रियप्रदेशाऽवस्थानं निद्रा । | ७६ | २५३ |
| २१५ | रसत्वजातियोगी रसनग्राह्यो गुणो रसः । | ५१ | १३९ |
| २१६ | रसोऽपि मधुर-कटु-तिक्त-कषायाम्ल-लवण-चित्रभेदात् सप्तविधः । | २६ | ४६ |
| २१७ | रूपत्वजातिमच्चक्षुर्मात्रग्राह्यो गुणो रूपम् । | ५१ | १३८ |
| २१८ | रूपं सित-लोहित-हरित-कपिल-पीत-कृष्ण-चित्रभेदात् सप्तविधम् । | २५ | ४५ |
| २१९ | रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व-संस्काराः । एते चतुर्दश गुणाः पृथिवीसमवेताः । | ८२ | २८७ |
| २२० | रूप-रस-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-गुरुत्व-द्रवत्व-स्नेह-संस्काराः । एते चतुर्दश गुणा अप्सु समवेताः । | ८३ | २८८ |
| २२१ | रूप-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-द्रवत्व-संस्काराः । एते एकादश गुणास्तेजःसमवेताः । | ८३ | २८९ |

| | | | |
|---|---|---|---|
| २२२ | लघुत्वं गुरुत्वाभाव एव । | ४२ | १११ |
| २२३ | लिङ्गपरामर्शत्वप्रवचनमुपनयः । | ७३ | २४० |
| २२४ | लिङ्गसम्बन्धप्रयुक्तनिश्चितसाध्यत्ववचनं निगमनम् । | ७३ | २४१ |
| २२५ | लिङ्गस्य त्रैविध्यात् । | ३० | ६५ |
| २२६ | लिङ्गस्य पक्षधर्मत्ववचनं हेतुः । | ७३ | २३८ |
| २२७ | वस्तुस्वरूपमात्रावभासकं निर्विकल्पकम् । | ७७ | २५४ |
| २२८ | वायुत्वजातियोगी अरूपः स्पर्शवान् वायुः । | ४९ | १३२ |
| २२९ | वायुरपि नित्योऽनित्यश्च । | १९ | २८ |
| २३० | विद्यमानयोः सम्बन्धो युतसिद्धिः । | ८८ | ३२० |
| २३१ | विनाशः प्रध्वंसः । | ६५ | १९७ |
| २३२ | विभागत्वसामान्यवान् विभक्तव्यवहाराऽसाधारणं कारण विभागः । | ५३ | १४६ |
| २३३ | विभागानुत्पाद्यविभागप्रागभावसम्बन्धकर्मावच्छिन्नः कालः क्षणः । | ६४ | १९२ |
| २३४ | विभागाऽसमवायिकारणो विभागो विभागजः । | ६७ | २०९ |
| २३५ | विभागो द्विविधः । | २८ | ५५ |
| २३६ | विशिष्टग्रहणं सविकल्पकम् । | ७७ | २५५ |
| २३७ | विशिष्टिस्तु विशेषणविशेष्यसम्बन्ध एव । | ४२ | ९९ |
| २३८ | विशेषस्तु सामान्यरहित एकद्रव्यवृत्तिः । | ४८ | १२६ |
| २३९ | विशेषा नित्यद्रव्यसमवेताः । | ८४ | २९७ |
| २४० | विशेषास्तु यावन्नित्यद्रव्यवृत्तित्वादनन्ता एव । | ९ | ७ |
| २४१ | विषयः समुद्रादिः । | १५ | २१ |
| २४२ | विषयस्तु वृक्षादिकम्पजनक । | २० | ३३ |
| २४३ | विषयो घटादिः । | १४ | १५ |
| २४४ | विषयो भौमदिव्यौदर्याकरजरूपः । | १८ | २७ |
| २४५ | विहितत्वं धर्मोत्पादकत्वम् । | ७९ | २६९ |
| २४६ | वैशिष्ट्यमन्यव्यावृत्तिः । | ८७ | ३१३ |
| २४७ | व्यधिकरणमवच्छेदकमुपलक्षणम् । | ८७ | ३१६ |
| २४८ | व्यापकं साध्यम्, व्याप्यं साधनम् । | ७० | २२६ |
| २४९ | व्यापकमात्र सामान्यं परम् । | ५७ | १६७ |
| २५० | व्याप्तिश्च व्यापकस्य व्याप्याधिकरणोपाध्यभावविशिष्टः सम्बन्धः । | ७० | २२४ |
| २५१ | व्याप्यमात्रं सामान्यमपरम् । | ५८ | १६८ |
| २५२ | व्याप्यव्यापकरूपं गुणत्व-द्रव्यत्वादिसामान्यं परापरम् । | ५८ | १६९ |
| २५३ | शक्तिः स्वरूपमेव । | ४१ | ९८ |
| २५४ | शब्दगुणमाकाशम् । | ५० | १३३ |
| २५५ | शब्दत्वजातियोगी श्रोत्रमात्रग्राह्यो गुणः शब्दः । | ५७ | १६१ |
| २५६ | शब्दस्याप्यनुमानविषयत्वेनाविनाभावोपजीवकत्वेन वाऽनुमानत्वम् । | ७२ | २३६ |

| | | | |
|---|---|---|---|
| २५७ | शब्दो वर्णात्मकोऽवर्णात्मकश्च । | ३८ | ८५ |
| २५८ | शरीरमस्मदादीनां प्रत्यक्षसिद्धम् । | १२ | १३ |
| २५९ | शरीरमादित्यलोके । | १६ | २५ |
| २६० | शरीरं वरुणलोके । | १४ | १९ |
| २६१ | शरीरं वायुलोके । | १९ | ३१ |
| २६२ | शरीरसम्बन्धेन ज्ञानवत्त्वं क्षेत्रज्ञत्वम् । | ६५ | १९८ |
| २६३ | शीतादीनां शीतत्वादिकम् । | ६६ | २०३ |
| २६४ | श्रेयःसाधनाभिधायकं शास्त्रम् । | ८८ | ३२२ |
| २६५ | षडिन्द्रियाणि ईश्वरश्चेति सप्त । | ३० | ६३ |
| २६६ | संयोगत्वसामान्यवान् अनित्यः सम्बन्धः संयोगः । | ५२ | १४५ |
| २६७ | संयोग–विभाग–सुख–दुःख–द्वेष–संस्कार–धर्मा–ऽधर्म–शब्दा अव्यापकाः । | ३८ | ८८ |
| २६८ | संयोगाऽसमवायिकारणः संयोगः संयोगजः । | ६६ | २०७ |
| २६९ | संयोगो द्विविधः । | २८ | ५३ |
| २७० | संस्कारत्वसामान्यवान् स्वोत्पत्त्यवस्थापादको गुणः संस्कारः । | ५५ | १५८ |
| २७१ | संस्कारो वेगो भावना स्थितिस्थापकश्च । | ३७ | ८२ |
| २७२ | स एव क्रियाभेदादपानादिसञ्ज्ञां लभते । | २० | ३५ |
| २७३ | सकलकारणयौगपद्यमुत्पत्तिः । | ६३ | १९० |
| २७४ | सङ्ख्यात्वसामान्यवती गणनाऽसाधारणं कारणं सङ्ख्या । | ५२ | १४२ |
| २७५ | सङ्ख्या–परिमाण–पृथक्त्व–संयोग विभाग–बुद्धि–सुख–दुःखेच्छा–द्वेष-प्रयत्न-धर्मा-ऽधर्म-भावनाः । एते चतुर्दश गुणा आत्मसमवेताः । | ८३ | २९३ |
| २७६ | सङ्ख्या–परिमाण–पृथक्त्व–संयोग-विभाग-परत्वा-ऽपरत्व-संस्काराः । एते अष्टौ गुणा मनःसमवेताः । | ८३ | २९४ |
| २७७ | सङ्ख्या–परिमाण–पृथक्त्व-संयोग-विभागाः । एते पञ्च गुणा कालदिक्समवेताः । | ८३ | २९२ |
| २७८ | सङ्ख्या–परिमाण–पृथक्त्व-संयोग–विभाग–शब्दाः । एते षड् गुणा आकाशसमवेताः । | ८३ | २९१ |
| २७९ | सङ्ख्याऽपि एकत्व–द्वित्व–बहुत्वभेदात् त्रिविधा । | २७ | ५० |
| २८० | स च शरीरेन्द्रियविषयप्राणलक्षणः । | १९ | ३० |
| २८१ | स च श्रवणमनननिदिध्यासनसाक्षात्कारलक्षणश्चतुर्विधः । | ४४ | ११२ |
| २८२ | सञ्ज्ञामात्रेण पदार्थानामभिधानमुद्देशः । | ८२ | २८६ |
| २८३ | सन्दिग्धसाध्यत्वेनोपात्तत्वं पक्षत्वम् । | ७१ | २३१ |
| २८४ | सबाधकं सामान्यमुपाधिः । | ८० | २७३ |
| २८५ | समवायस्त्वेक एव । | १० | ८ |
| २८६ | समवायाभावौ तु असमवेतावेव । | ८४ | २९८ |
| २८७ | समवायिकारणं त्रयाणां द्रव्यमेव । | ८६ | ३०७ |
| २८८ | समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् । | ८१ | २८१ |

| | | | |
|---|---|---|---|
| २८९ | समस्तमूर्तद्रव्यसंयोगित्वं विभुत्वम् । | ८७ | ३१९ |
| २९० | समानाधिकरणं व्यावर्तकं विशेषणम् । | ८७ | ३१४ |
| २९१ | सम्यक्साध्यानधिकरणत्वं विपक्षत्वम् । | ७२ | २३३ |
| २९२ | सविकल्पकनिर्विकल्पकयोस्तु प्रमायामप्रमायां चान्तर्भावः । | ३४ | ७२ |
| २९३ | सांसिद्धिकत्वं तेजःसंयोगानुत्पाद्यत्वम् । | ७८ | २६३ |
| २९४ | साक्षात्कारज्ञानकारणमिन्द्रियम् । | ६२ | १८३ |
| २९५ | सादिरनन्तः प्रध्वंसाभावः । | ५९ | १७१ |
| २९६ | सादृश्यमुपाधिरूपं सामान्यम् । | ४२ | १०० |
| २९७ | साधनाश्रययोरन्यतरत्वे सति प्रत्यक्षप्रमायोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम् । | ६९ | २२ |
| २९८ | साधनाश्रययोरन्यतरत्वे सति प्रमायोगव्यवच्छिन्नं प्रमाणम् । | ६८ | २१९ |
| २९९ | साध्यतदभावसाध्यत्वं सन्दिग्धत्वम् । | ७४ | २४५ |
| ३०० | साध्याऽसाधकः पक्ष एव वर्तमानो हेतुरनध्यवसितः । | ७५ | २४७ |
| ३०१ | सामान्यं जातिरूपमुपाधिरूपं च । | ३९ | ९२ |
| ३०२ | सामान्य द्रव्यगुणकर्मसमवेतम् । | ८३ | २९६ |
| ३०३ | सामान्यं नित्यमेकमनेकसमवेतम् । | ४८ | १२५ |
| ३०४ | सामान्यं परमपरं परापरं चेति । | ८ | ६ |
| ३०५ | सा शरीरेन्द्रियविषयरूपा । | १२ | १२ |
| ३०६ | सितादीनां सप्तानां सितत्वादिकम् । | ६६ | २०० |
| ३०७ | सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् । | ५३ | १५० |
| ३०८ | सुखं तु सांसारिकं स्वर्गश्च । | ३५ | ७५ |
| ३०९ | सुखसाधन ज्ञानमुपादानम् । | ७७ | २५८ |
| ३१० | सुरभिरसुरभिश्च । | २६ | ४८ |
| ३११ | स्तिमितवायुस्तु परमाणुसमूह एवानारब्धद्रव्य इति । | २१ | ३६ |
| ३१२ | स्थितिर्वर्तमानत्वम् । | ६४ | १९४ |
| ३१३ | स्नेहत्वसामान्यवान् द्रवत्वशून्यः सङ्ग्रहाऽसाधारणं कारणं स्नेहः । | ५५ | १५७ |
| ३१४ | स्नेहः स्वाभाविक औपाधिकश्च । | ३६ | ८१ |
| ३१५ | स्पर्शत्वजातियोगी स्पर्शमात्रग्राह्यो गुणः स्पर्शः । | ५२ | १४१ |
| ३१६ | स्पर्शः शीतोष्णाऽनुष्णाशीतभेदात् त्रिविधः । | २७ | ४९ |
| ३१७ | स्पर्श-सङ्ख्या-परिमाण पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-संस्काराः । एते नव गुणा वायुसमवेताः । | ८३ | २९० |
| ३१८ | स्वकार्यप्रागभावसम्बद्धत्व वा । | ६५ | १९६ |
| ३१९ | स्वपक्षपरपक्षसिद्धावपि त्रिरूपो हेतुः प्रकारणसमः । | ७५ | २४८ |
| ३२० | स्वसमवेतकार्योत्पादकत्वं समवायिकारणत्वम् । | ८१ | २८० |
| ३२१ | स्वार्थमर्थरूपत्वम् । | ७२ | २३४ |
| ३२२ | स्वसमवेतसुखदुःखयोरन्यतरसाक्षात्कारो भोगः । | ६१ | १८१ |